# संस्कृत-वाङ्मय का बृहद् इतिहास

दशम-खण्ड

वेदान्त

प्रधान सम्पादक

पद्मभूषण आचार्य श्री बलदेव उपाध्याय

सम्पादक

प्रो. संगमलाल पाण्डेय

उत्तर प्रदेश संस्कृत संस्थान

लखनऊ

# संस्कृत-वाङ्मय का बृहद् इतिहास

दशम-खण्ड

वेदान्त

(वेदान्त-अद्वैत तथा वेदान्त सम्बद्ध सम्प्रदाय, गीता साहित्य)

प्रधान सम्पादक

पद्मभूषण आचार्य बलदेव उपाध्याय

सम्पादक

प्रो. संगम लाल पाण्डेय

उत्तर प्रदेश संस्कृत संस्थान

लखनऊ

प्रकाशक :

**श्रीमती अलका श्रीवास्तव**

निदेशक :

**उत्तर प्रदेश संस्कृत संस्थान, लखनऊ**

प्राप्ति स्थान :

**विक्रय विभाग :**

उत्तर प्रदेश संस्कृत संस्थान, नया हैदराबाद,

लखनऊ-२२६००७

प्रथम संस्करण :

वि.सं. २०५२ (१६६६ ई.)

प्रतियाँ : ११००

मूल्य : रु. ३००/-(तीन सौ रुपये)



मुद्रक : **शिवम् आर्ट्स,** निशातगंज लखनऊ । दूरभाष : ३८६३८६

# प्रस्तावना

शङ्करं शङ्कराचार्यं केशवं बादरायणम्।
भाष्यसूत्रकृतौ वन्दे भगवन्तौ पुनःपुनः।।

## १. वेदान्तदर्शनम्

वेदान्तदर्शनं हि भारतीयाध्यात्मशास्त्रस्य चरमो विकासः। वेदस्यान्तः सिद्धान्तो वेति विशिष्टार्थेऽस्य प्रयोग उपनिषत्सु दृश्यते[1] वेदस्य रहस्यात्मकसिद्धान्तप्रतिपादकत्वेनोपनिषदे वेदान्तशब्दप्रयोग उपलभ्यते। पश्चादुपनिषत्सु प्रतीयमानविरोधपरिहाराय तथ्यानामेकवाक्यतायै च भगवता व्यासेन विरचितं ब्रह्मसूत्रमेवोपनिषन्मूलकत्वाद् 'वेदान्तसूत्र' नाम्ना प्रसिद्धम्। उपनिषदां सारो हि श्रीमद्भगवद्गीता। उपनिषद्-ब्रह्मसूत्र-गीतेति त्रयो ग्रन्थाश्च 'प्रस्थानत्रयीति नाम्ना ख्यातिं प्राप्ताः।

**अद्वैतवेदान्तः**-अद्वैतवेदान्तस्य प्रवर्तकेषु आचार्यगौडपादशङ्करौ प्रामुख्यं भजतः। विद्यते ह्यस्य दर्शनस्य विपुलं साहित्यं यन्मौलिकवैदुष्यदृष्ट्या नितान्तमेव प्रशस्यम्।

**ब्रह्म**-अस्ति अस्मिञ्जगति निर्विकल्पोपाधिरहिता निर्विकारा एका सत्ता या 'ब्रह्म' इत्युच्यते। श्रुतौ हि अस्ति ब्रह्मणः सगुणनिर्गुणरूपयोरुभयोः पर्याप्तविवेचनम्। शङ्कराचार्यस्य सगुणं ब्रह्म जगदिव मायासंवलितमतएव मायिकम्, किन्तु निर्गुणं ब्रह्म पारमार्थिकं विद्यते। 'सत्यं ज्ञानमनन्तं ब्रह्म' 'विज्ञानमानन्दं ब्रह्म' इत्यस्ति ब्रह्मणः स्वरूपलक्षणम्। सच्चिदानन्दं हि ब्रह्मणो यथार्थस्वरूपम्। इदमेव ब्रह्म मायासंवृतं सत् सगुणं ब्रह्म इत्यभिधीयते। तदेव जगत्कारणमपि भवति। सृष्टिव्यापारस्तस्य लीलामात्रम्। सर्वकामस्य सर्वज्ञस्य तस्य सृष्टिविधौ न किमपि प्रयोजनम्।[2] तत्रेश्वरो जगतो निमित्तकारणमिति न्यायविद आमनन्ति। अद्वैत-वेदान्ते तु ब्रह्मैव जगत उपादाननिमित्तोभयकारणमिति सिद्धम्। तत्र ब्रह्ममीमांसायामस्ति शङ्कररामानुजयोर्वैमत्यम्। तथाहि ब्रह्म सजातीयविजातीयस्वगतभेदशून्यमिति शङ्करः, सजातीय-विजातीयभेदरहितोऽपीश्वरो न स्वगतभेदरहित इति रामानुजो मन्यते।

**माया**-निर्गुणब्रह्मणः सगुणब्रह्मणि परिणतेर्मूलं मायेति कथ्यते। सा किल अग्नेरपृथग्भूता दाहशक्तिरिव ब्रह्माभिन्ना शक्तिः, त्रिगुणात्मिका ज्ञानविरोधिनी भावरूपा च विद्यते। वेदान्ते सा सदसद्भ्यामनिर्वचनीयेति निगद्यते। तद्यथा सत् चेत् न बाध्येत, असत् चेत् न प्रतीयेत। अतएवोभाभ्यां विलक्षणा अनिर्वाच्येति स्थितिः। अस्या मायाया आवरणविक्षेपनामिके द्वे

१. वेदान्ते परमं गुह्यम् (श्वे.उप. ६।२२) वेदान्तविज्ञानसुनिश्चितार्थाः (मुण्डक ३।२।६।)
२. द्रष्टव्यं, ब्रह्मसूत्र २।१। ३१-३२ शाङ्करभाष्यम्।

शक्ती। अनेनैव शक्तिद्वयेन वस्तुनि ब्रह्मणि अवस्तुनो जगतः प्रतीतिं कारयति सा। मायोपाधिकं ब्रह्मैव जगतो निमित्तकारणं तदेव चोपादानकारणमपि। एवमेकस्मिन्नेव ब्रह्मणि कारणद्वयस्यास्तित्वं भाति।

**जीवः**-अन्तःकरणावच्छिन्नं चैतन्यं 'जीव' इत्युच्यते। जीवोऽयं ब्रह्म इवाद्वैतः। दर्शनान्तरे अणुपरिमाणो जीवोऽद्वैतमते तु ब्रह्म इव स विभुरेकश्च।

अतिसूक्ष्मत्वादयमणुरित्यभिधीयते। उपलभ्यते ह्यात्मचैतन्यं जाग्रतस्वप्नसुषप्तिष्ववस्थासु, अन्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमयेषु पञ्चकोषेषु च। आत्मनः शुद्धचैतन्यं तु अवस्थात्रयातीतं पञ्चकोषातिरिक्तं विद्यते। अनयोर्जीवब्रह्मणोः सम्बन्धं बोधयितु- मद्वैतवादिभिर्बिम्ब-प्रतिबिम्बभावः प्रामुख्येन स्वीकृतः।

**अध्यासः**-अज्ञानकारणादेव शुद्धचैतन्यं स्वविशुद्धस्वरूपतश्च्युतं सदल्पज्ञजीवरूपेण परिणमते संसारबन्धं चानुभवति। ज्ञानादेव भवत्यस्य बन्धस्य निवृत्तिः। वस्तुनि अवस्त्वारोपोऽध्यासः कथ्यते। अनेन हि अध्यासेन संसारभावो ज्ञानेन चाध्यासनिवृत्त्या मोक्षः संभवति। कार्यकारणसम्बन्धविषयेऽद्वैतवेदान्तोऽस्ति विवर्तवादी, किन्तु रामानुजप्रभृतय आचार्याः सन्ति परिणामवादिनः। तात्त्विकपरिवर्तनं (दुग्धेन दधि) विकार उच्यते, अतात्त्विकपरिवर्तनं (रज्जौ सर्पः) विवर्तः कथ्यते[1]। जीवो वस्तुतो ब्रह्माभिन्न इति 'तत्त्वमसि' महावाक्यस्य तात्पर्यार्थः भवति। अशेषानन्दमयी दशैव मुक्तिः।

अद्वैतज्ञानानन्तरं जीवः स्वोपाधिमुक्तः सन् सच्चिदानन्दरूपं प्राप्नोति। वेदान्तस्याचारमीमांसा सर्वथा युक्तियुक्ता व्यावहारिकी उपादेया चास्ति। अस्ति 'वसुधैव कुटुम्बकम्' इति वेदान्तशिक्षायाः फलश्रुतिः।

**ब्रह्मसूत्रम्**-वेदान्तदर्शने भगवतो बादरायणस्य ब्रह्मसूत्रमस्ति प्रशस्तं ग्रन्थरत्नम्। इदं चतुर्षु अध्यायेषु विभक्तम्। अध्यायाश्चास्य चतुर्षु पादेषु विभक्ताः। प्रथमे समन्वयाध्याये समेषां वेदान्तवाक्यानां साक्षात् परम्परया वा प्रत्यगभिन्नेऽद्वितीये ब्रह्मणि तात्पर्यमिति प्रदर्शितमस्ति। द्वितीये अविरोधाध्याये स्मृतितर्कादीनां सम्भावितविरोधं परिहृत्य ब्रह्मणि अविरोधः प्रतिपादितः। तृतीयः साधनाध्यायो वेदान्तसम्मतसाधनानि वर्णयति। चतुर्थे फलाध्याये सगुणनिर्गुणविद्यानां फलानि विवेचितानि सन्ति।

## ब्रह्मसूत्रस्य सन्ति बहवो भाष्यकाराः येषां सूची अधो द्रष्टव्या-

| संख्या | नाम | भाष्यनाम | सिद्धान्तः |
|---|---|---|---|
| १. | शङ्करः (७८८-८२० ई.) | शारीरकभाष्यम् | निर्विशेषाद्वैतम् |
| २. | भास्करः (८५० ई.) | भास्करभाष्यम् | भेदाभेदः |

१. सतत्त्वतोऽन्यथा प्रथा विकार इत्युदीरितः।
अतत्त्वतोऽन्यथा प्रथा विवर्त इत्युदाहृतः।। (वेदान्तसारे, निर्णय सागर प्रेस)

| | | | |
|---|---|---|---|
| ३. | रामानुजः (११४० ई.) | श्रीभाष्यम् | विशिष्टाद्वैतम् |
| ४. | मध्वः (१२३८) | पूर्णप्रज्ञभाष्यम् | द्वैतम् |
| ५. | निम्बार्कः (१२५०) | वेदान्तपारिजातभाष्यम् | द्वैताद्वैतम् |
| ६. | श्रीकण्ठः (१२७०) | शैवभाष्यम् | शैवविशिष्टाद्वैतम् |
| ७. | श्रीपतिः (१४००) | श्रीकरभाष्यम् | वीरशैव-विशिष्टाद्वैतम् |
| ८. | वल्लभः (१४७६-१५४४) | अणुभाष्यम् | शुद्धाद्वैतम् |
| ९. | विज्ञानभिक्षुः (१६००) | विज्ञानामृतम् | अविभागाद्वैतम् |
| १०. | बलदेवः (१७२५) | गोविन्दभाष्यम् | अचिन्त्यभेदाभेदः |

## २. वेदान्तोपदेशविधेर्विज्ञानमूलकत्वम्-

शश्वत् स्वरूपमहसैव निपीतभेद-
मोहाय बोधधिषणाय नमः परस्मै।
विश्वोद्भवस्थितिलयेषु निमित्तलीला-
रासाय ते नम इदं चकृमेश्वराय।।[1]

वेदान्ततत्त्वस्योपदेशविधेः स्वरूपमवबुध्य तस्य वैज्ञानिकत्वं समर्थयितुमयमुद्यमः। तत्र वेदान्तोपदेशविधिमन्तरेण न किमपि नूतनं तथ्यमुद्भावनीयं भवति साम्प्रतम्। वेदान्ततत्त्वानां विमर्शसमकालमेवायमुपदेशविधिरपि तत्रैव तस्मिन्नेव काले स्वाभीष्टं स्वरूपमलभतेत्येव वक्तुं पार्यते। अत्यन्तप्राचीनकालात् प्रवर्तितोऽयं विधिर्बहुष्वद्वैतवेदान्तग्रन्थेषु स्वल्पाक्षरैर्वा भवतु नितान्तं स्पष्टमुद्दिश्यत इति जानन्त्येव वेदान्तविदो विपश्चितः। श्री शङ्कराचार्यचरणैः स्वीये 'विवेकचूडामणि' ग्रन्थे उपदेशसाहस्र्यां चातीव शोभनैः शब्दैर्बालानां सुखबोधाय रमणीयया शैल्या उट्टङ्कितोऽयं विषयस्तत एवावधेयः।

अद्वैतवेदान्तिनां नये मुख्यः प्रश्नस्त्वयमेव यन्निष्प्रपञ्चस्य ब्रह्मणः स्वरूपोपलब्धिः कथमुपदेष्टुं पार्यते! शब्दैरद्योत्यं मनसाऽमतं बुद्ध्या चानिश्चेयं निष्प्रपञ्चं ब्रह्म कथं च स्वरूपावबोधेन ज्ञातुं परमार्थतः प्रभवन्ति साधकाः! स्वरूपावबोधाय प्रपञ्चात्मिका भाषैव समर्था। उद्देशनिर्देशलक्षणात्मकं समग्रं साधनजातं शब्दैरेवावबोद्धुं शक्यते तज्ज्ञैः। इत्थं भूते व्यतिकरे प्रपञ्चसाधनमुखेनैव निष्प्रपञ्चस्य स्वरूपोदयो नामेति वेदान्तिनां सिद्धान्तः। प्रपञ्चमाश्रित्यैव निष्प्रपञ्चवर्णनेति वचनं तदर्थो वा सर्वत्र जागर्ति वेदान्तग्रन्थेषु। व्यवहारमनाश्रित्य परमार्थस्य न सम्यगवबोधः सम्भवति। व्यवहारश्च शब्दप्रयोगमन्तरेण नैव सिध्यति, शब्दमूलकत्वाद्

---

१. श्रीमद्भागवतपुराणम्-

व्यवहारस्य। साधनचतुष्टयसम्पन्न एव शिष्यो वेदान्ते जिज्ञासुः। अधिकारिज्ञानमुखेनैवोपदेशस्य याथार्थ्यं समुपजृम्भते। प्रख्यातं साधनचतुष्टयं शिष्यस्य योग्यतां नूनमभिव्यनक्ति। नित्यानित्यवस्तुविवेकवान्, ऐहिकामुष्मिकभोगविरागवान्, शमदमोपरतितितिक्षा-समाधानश्रद्धासम्पत्तिसम्पन्नो जगतो नानाविधसन्तापपापेभ्यो मोक्षमिच्छन् शिष्यः शान्तं दान्तमहेतुकदयालुं ब्रह्मवेत्तारं गुरुं शरणं व्रजति ब्रह्मणः स्वरूपोपलब्धये। गुरुश्च तमनुशास्त्यध्यारोपापवादविधिना।

निष्प्रपञ्चे ब्रह्मणि प्रपञ्चात्मकस्य जगतः पदार्थानामारोप एव 'अध्यारोपः।' अध्यारोपसमनन्तरमपवादविधिः प्रवर्तते। अपवादो नाम वर्जनम्। आरोपविषयिणि ब्रह्मण्यारोपितानां पदार्थानामेकैकशो निराकरणं नाम अपवादविधिः। एकस्यैव कृत्स्नस्योपदेशविधेरिमौ द्वावंशौ भवतः। उभयोः प्रयोगकात्स्न्येनैव फलसिद्धिः नैकेन केनाप्यभीप्सितवस्तुसम्प्रत्ययः। मिलितावेवेमावंशौ विधेः स्वरूपं निष्पादयतः। आत्मस्वरूपविमर्शे प्रस्तूयमाने सत्यात्मनि शरीरेन्द्रियमनोबुद्धीनामारोपः प्रथमं प्रसाध्यते।

आत्मा शरीररूप एव, लोके तथैव प्रत्ययप्रसिद्धेरित्यध्यारोपः। न तथा = नात्मा शरीररूपः, विशरणरूपत्वात् शरीरस्यानित्यरूपत्वात्। एतद्भिन्न आत्मा तु नित्यः, सर्वदैव एकरसत्वात्। एवमात्मा नायं देहः प्रसिध्यति। 'दिह् उपचये' इति धातोर्निष्पन्नोऽयं देहशब्दः स्वात्मोपचयापचयावभिधत्ते। आत्मा त्वेकरसत्वादुपचयराहित्याभावाद् न देहरूपतां धत्ते इत्यपवाद-विधिना आत्मनो देहशरीरादिभ्यः पार्थक्यं सिध्यति।

'आत्मा मनःस्वरूपः, उभयोर्मननसारूप्याद्धेतोः' इत्यत्र। वाक्ये आत्मनि मनसः समारोप इत्यध्यारोपांशः।

आत्मा न तथा, विभुत्वेन हेतुना, मनस्त्वरूपमेव क्षणेनैकेनैव पदार्थेन संयुक्तत्वाद् मनस आणवं सुप्रसिद्धम्। न्यायमते आत्ममनःसंयोगे पूर्णे एव पदार्थानां प्रत्यक्षं सम्भवति, आत्ममनसोरैक्ये तु तत्संयोगस्यानुपपन्नत्वात् पदार्थानां सार्वत्रिकं सार्वकालिकं च प्रत्यक्षं प्रसज्येत। इत्थमात्मनो न मनोरूपता सिध्यतीति त्वपवादविधिः।

इत्थमात्मा बुद्धिरूपो निश्चयजननसाम्याद्धेतोरित्यत्रात्मनि बुद्धेरध्यारोपः प्रथमं विधीयते। तदनन्तरं युक्त्या ऐक्यं निरस्य तयोरपवादोऽत्र निर्दिश्यते।

इत्थमेवात्मनि अन्नमय-प्राणमय-मनोमयविज्ञानमय-आनन्दमयाख्यानां कोषाणां प्रथममध्यारोपो विधीयते लौकिकं व्यवहारमनुभवं चाद्रियद्भिर्विद्वज्जनैः, परन्तु युक्तिहेतूपन्यासेन तस्य एभ्यः समग्रेभ्यः कोषेभ्यः पार्थक्यं साध्यते।

इत्थमेव जाग्रत-स्वप्न-सुषुप्तिस्थितं चैतन्यं प्रथमतः आत्मन्यारोप्यते। अनन्तरं कारणोपन्यासपुरः सरमात्मनस्त्रिविधचैतन्याद् वैशिष्ट्यमुरीक्रियत इति त्वपवादविधिना स्थिरीक्रियते वेदान्तिभिः।

**अयं निष्कर्षः**-अध्यारोपापवादविधिनैव निष्प्रपञ्चस्यात्मनः स्वरूपोपलब्धिं कर्तुं नूनं पारयन्ति विद्वज्जनाः, यदयमात्मा शरीरेन्द्रियमनोबुध्यादिव्यतिरिक्तः पञ्चकोषातीतः

स्थूल-सूक्ष्मकारणशरीरेभ्यो भिन्नो नित्यो मुक्त एकरसोऽस्ति जायते-वर्धते- विपरिणमते-अपक्षीयते-विनश्यतीति विकारषट्केन कथमपि नो विकृतिमाभजमानश्चैतन्यरूपः कोऽप्यलौकिकः पदार्थः।

वेदान्तोपदेशस्यायमेव विधिः संक्षेणात्र वर्णितः। अयमेव विधिर्नितान्तं वैज्ञानिकैर्नानाविज्ञानविभागेष्वज्ञातलक्षणस्य पदार्थस्य स्वरूपनिर्धारणाय सर्वदैव आद्रियते। दृष्टान्तरूपेणैतद्विषये बीजगणितस्य समीकरणपद्धतिमालोचयन्तु विपश्चितः।

क$^2$ + २क = २४ अत्र समीकरणे ककारोऽज्ञातलक्षणः पदार्थो वर्तते, यस्य स्वरूपं निर्धारणीयं वर्तते। तत्रोभयोः पक्षयोरेकाङ्को मेलितो यदा भवति, तदा समीकरणस्य स्वरूपं द्वितीयपङ्क्त्या निर्धारितं वर्तते। तृतीयपङ्क्तौ त्वस्य पिण्डीकृतं स्वरूपं निर्दिष्टम्। तस्यैव वर्गमूलकरणं तदधो निर्दिष्टम्। एतावत्पर्यन्तं त्वध्यारोपविधेरुपयोगो विधीयते। तदनन्तरमपवादविधिः प्रयुज्यते। आदौ य एव एकाङ्कः प्रथमं संयोजितोऽभवत्, स एवान्ते उभयतः पश्चाद् निष्कासितो भवति। एवं कृतेऽज्ञातमूलस्य ककारस्य मूल्यमायाति चतुः संख्येति। समीकरणस्वरूपं साम्प्रतमित्थं विलसति-

## अध्यारोपः

क$^2$ + २ क = २४ (१ पङ्क्तिः)

क२ + २ क+१ = २४+१ (२ पङ्क्तिः)

(क+१) २ = (५)$^2$ (३ पङ्क्तिः)

क+१ = ५ = ४+१ (४ पङ्क्तिः)

## अपवादः

क (-) = ४+१ (-१) (५ पङ्क्तिः)

∴ क = ४ (निष्पत्तिः)

अत्र बीजगणितीयसमीकरणस्य निष्पत्तावध्यारोपापवादविधिरेव समाश्रीयते गणितज्ञैर्ज्योतिर्विद्भिः। अमुं विधिं विहाय नान्योपायोऽस्त्यज्ञातलक्षणस्य 'क' पदार्थस्य मूल्यनिर्धारणाय, न कोऽपि विद्यते पन्था अन्यदीयः। इत्थं चाध्यात्मिकजगति निष्प्रपञ्चस्य वस्तुनः स्वरूपोपलब्धिर्येन विधिना क्रियते, स एव विधिर्वैज्ञानिकैरप्यङ्गीक्रियते भौतिक जगत्यज्ञातरूपस्य पदार्थस्य स्वरूपनिर्धारणायापीत्यहो जागर्ति वेदान्तोपदेशविधेः किमपि सार्वदेशिकं सार्वकालिकं च माहात्म्यम्।

अध्यात्मविषये निष्प्रपञ्चतत्त्वस्य स्वरूपाववोधाय यथार्थरूपां पद्धतिमाविष्कुर्वद्भ्यो वेदान्तविद्भ्यो मनीषिभ्यः समस्तविपश्चितां प्रणामाञ्जलयो निपतन्त्विति स्वैरमुक्त्वा विरम्यते। मूलग्रन्थे भास्करस्य परिचयो विस्तरेण वर्तते तथापि तस्य सिद्धान्तविवेचनं संक्षेपेण अत्र दीयते।

# ३. भास्करस्य सिद्धान्त-परिचयः

## भास्करीय गीताभाष्यसमीक्षा

भास्करप्रणीतं गीताभाष्यमिदं भेदाभेदवेदान्तमतमनुसृत्यैव प्रवर्तते। अतोऽस्य विशिष्टमतस्यैतिहासिकीं परम्परामनुरुध्य स्तोकमेवाधस्तात् किञ्चिदुदीर्यते विषयावगति-सौविध्याय वेदान्ततत्त्वजिज्ञासूनां विपश्चिताम्।

भारतीये दार्शनिकजगति भेदाभेदसिद्धान्तो नितान्तं प्राचीनः। अस्य मतस्य पोषका आचार्या न केवलं श्रीशङ्कराचार्यात् पूर्वमेवोपलभ्यन्ते, अपि तु ब्रह्मसूत्रकर्तुः श्रीबादरायणादपि प्रागेव तेषां समुपलभ्यमाना सत्ता नियतमेवास्य वेदान्तसम्प्रदायस्य प्राचीनतामाविष्करोति। श्रीबादरायणात् प्राक्कालीनौ आचार्यौ औडुलौमिः आश्मरथ्यश्च नूनमेव भेदाभेद-मतावलम्बिनावास्तामिति ब्रह्मसूत्रतोऽवसीयते। आचार्याश्मरथ्यमतेन कारणात्मना जीवब्रह्मणोरैक्यं प्रतिपाद्यते, परन्तु कार्यात्मना द्वयोरनैक्यं जागर्ति। यथा कारणात्मना सुवर्णस्य ऐक्यभावापन्नेऽपि कटककुण्डलादिकार्यरूपैस्तस्य नितान्तं भेदः स्फुटं प्रतीयते, तद्वज्जीवब्रह्मणोरपि भेदाभेदव्यवस्था समुन्नेया (ब्रह्मसूत्रे १।४।२०)। आचार्य श्री औडुलोमिमतेन तु भेदाभेद व्यवस्थितिरन्यरूपेण समाधेया। स तु जीवब्रह्मणोरैक्यानैक्यविषयेऽवस्थाविशेषमेव नियामकत्वेन हेतुभूतं मनुते। संसारदशायां नानारूपजीवानामेकरूपब्रह्मणः सकाशाद् भेदो वैशद्येनावगन्तुं शक्यः, परन्तु मुक्तिदशायां चैतन्यरूपस्यैकत्वात् चैतन्यरूपाणां ब्रह्मणश्चाभेदो नितरां सुसम्पन्नः (ब्र.सू. १।४।२१)। आचार्य निम्बार्कस्य साक्षाच्छिष्येण श्रीनिवासाचार्येण स्वीयवेदान्त-कौस्तुभे काशकृत्स्नोऽपि भेदाभेदवाद्याचार्यरूपेणैव व्यवस्थापितः "तदेव मुनित्रयमतद्वारा प्रसङ्गात् भेदाभेदप्रकारो भगवता दर्शितः" (१।४।२२) इति वदता। परन्तु श्रीशङ्कराचार्यः काशकृत्स्नमद्वैतवादिनमाचार्यमूरी-करोतीति तस्य (१।४।२३) ब्रह्मसूत्रभाष्यात् स्पष्टं भवति। अत एते सन्ति भेदाभेदप्रतिष्ठानपरा श्रीबादरायणात् प्राक्कालीना वेदान्तविद आचार्याः।

आसीद् भर्तृप्रपञ्चस्तु शङ्कराचार्यात् पूर्ववर्ती भेदाभेदप्रतिपादकः कोऽपि महनीय आचार्यः। तन्मतस्य खण्डनमाचार्येण बृहदारण्यकभाष्यस्य बहुषु स्थलेषु (२।३।६, २।५।१, ४।३।३०) विस्तरश आग्रहेण विहितः। भर्तृप्रपञ्चमतं त्वित्थं संक्षिप्यते-परमार्थस्त्वेकरूपोऽपि भवति, नानारूपोऽपि भवति, ब्रह्मरूपेण एको जीवरूपेण नाना। परमात्मन एकदेशमात्रं जीवो नाना। कामवासनादिजीवधर्माणां नानात्वाद् धर्मभेदाद् दृष्टिभेदाच्च। जीवस्य नानात्वं न औपाधिकम्, अपितु वास्तविकमेव। भर्तृप्रपञ्चमते ब्रह्मणः परिणामोऽपि सम्पद्यते। स परिणामस्त्रिधा निष्पन्नो भवति-(१) अन्तर्यामी-जीवरूपेण (२) अव्याकृतः-सूत्रविराड्देवतारूपेण, (३) जातिपिण्डरूपैश्च। साधनपक्षेऽयमाचार्यो ज्ञानकर्मसमुच्चयवादी वर्तते। कर्मजन्यं फलं त्वनित्यमिति ध्रुवम्। परन्तु ज्ञानद्वारा विमलीभूतेन कर्मणा आत्यन्तिकं श्रेय उपलब्धुं नूनं पार्यते। अपरपरमोक्षरूपेण च मोक्षस्य द्वैविध्यं मनुतेऽयमाचार्यः। अपरमोक्षे अस्मिन्नेव शरीरे ब्रह्मसाक्षात्कारेण जायमाना मुक्तिरपवर्गशब्देन व्यपदिश्यते। जीवन्मुक्तिरूपीऽयं मोक्षः। परमोक्षस्तु विदेहदशायां

देहापायानन्तरं जीवस्य ब्रह्मभावापत्तावेव सम्भवति। इत्थं भर्तृप्रपञ्चस्य भेदाभेदसिद्धान्तो वेदान्तनये कमपि महिमानमाधत्ते।

यादवो भेदाभेदवादी वेदान्तविदिति तु निश्चितम्। तस्याविर्भावकालो न प्रमाणैः साधु विनिश्चितः। यदि स श्रीरामानुजाचार्यस्य गुरुणा यादवप्रकाशेन साकमैक्यं भजते, तर्हि एकादशशत्या अन्तिमे भागे जनिमलभतेति निश्चेतुं सुशकम्। श्रीरामानुजाचार्येण वेदार्थसंग्रहे, वेदान्तदेशिकेन परमतभङ्गिनाम्नि ग्रन्थे व्यासतीर्थेन च तात्पर्यचन्द्रिकायां तन्मतमुपन्यस्तम्। गौरवभिया न विशेषतोऽत्र निर्धार्यते। यादवस्तु श्रीशङ्कराचार्यादर्वाचीन इति तु निश्चितप्रायमेव, तयोः पौर्वापर्यनिर्णयस्य सौकर्यात्।

गीताभाष्यस्यैतस्य रचयिता भास्करः कं देशं कं च कालं स्वजन्मनाऽलञ्चकारेति नियतप्रमाणाभावे न किञ्चिद् ध्रुवं निश्चेतुं पारयामः। रामानुजाचार्येण वेदार्थसंग्रहे, उदयनाचार्येण न्यायकुसुमाञ्जलौ, वाचस्पतिमिश्रेण च भामत्यां भास्करस्य भेदाभेद-मतखण्डनाद् वाचस्पतिप्राक्कालिकतयास्य समयः खिष्टाब्दाष्टमशतीतो नार्वाग् भवितुमर्हति। भास्करशङ्कराचार्ययोः पौर्वापर्यकालविषये बहुशः सन्दिह्यते पण्डितैः। केचन भास्करः शङ्कराचार्यादर्वाचीन इति मन्यन्ते, परन्तु गीताभाष्यस्यैतस्य सम्पादकवर्यो नानाभिरभिनवाभिर्युक्तिभिः तस्य शङ्करादपरकालिकतां निरस्य पूर्वकालिकतामेव प्रमाणयति। इमा युक्तयस्तर्काश्च तद्विरचितभूमिकात एवावगन्तव्याः[1]

**भास्करस्य दार्शनिकं मतम्।** भास्करस्य भेदाभेदमतविमर्शः साम्प्रतमत्र संक्षिप्यते। ब्रह्म-तस्य मतेन ब्रह्म सगुणं सल्लक्षणबोधलक्षणं सत्यज्ञानानन्तलक्षणं च वर्तते। तच्चैतन्यरूपं रूपान्तररहितमद्वितीयं च विद्यते। तस्मादेव सृष्टिः प्रवर्तते, प्रलयदशायां च सर्वे विकारा ब्रह्मण्येव प्रलीयन्ते। ब्रह्मणः शक्तिद्वयं वर्तते-एका भोग्यशक्तिः अपरा च भोक्तृशक्तिः (ब्रह्मसूत्र भास्करभाष्ये २।१।२७)। भोग्यशक्तिरेव आकाशवायुवाद्यचेतनजगद्रूपेण परिणमते। भोक्तृशक्तिस्तु चेतनजीवरूपमाधत्ते। ब्रह्मणः शक्तयः पारमार्थिका विद्यन्ते। समग्रशक्तिभिः सम्पन्नः परमात्मा सर्वज्ञः सर्वशक्तिमांश्च वर्तते। भास्करमतेन ब्रह्म स्वत एव परिणमते। परिणामधारणं ब्रह्मणः स्वभाव एव भवति। यथा क्षीरं दधिभावाय कल्पते, अम्भश्च हिमभावाय कल्पते, तथैव ब्रह्मा अपि स्वभावत एव जगद्रूपेण परिणमते। तथा च भास्करभाष्यस्य वचनमिदं प्रमाणत्वेनात्रोपन्यस्यते-

"ब्रह्म स्वत एव परिणमते तत्स्वाभाव्यात्। यथा क्षीरं दधिभावाय अम्भो हिमभावाय, न तु तत्रापि किञ्चन आधारभूतं च द्रव्यमपेक्ष्यते, (भास्करभाष्ये, २।१।२४)। परिणाम-धारित्वेऽपि ब्रह्मणः स्वस्वरूपात् प्रच्युतिर्नैव जायते इति भास्करमतम्। यथा अच्युतस्वभावस्तन्तुः पटरूपेण परिणमते, अच्युतस्वभावात् च आकाशाद् वायुरुत्पद्यते। तथा भास्करस्य प्रमाणभूतं वचनम्-

---

१. डॉ. सुभद्रझा महोदयेन सम्पादितं सरस्वती भवन-ग्रन्थमालायां प्रकाशितं संस्करणं द्रष्टव्यम्। (वाराणसी १९६७ ई.)

अप्रच्युतस्वभावस्य शक्तिविक्षेपलक्षणः।
परिणामो यथा तन्तुनाभस्य पटतन्तुवत्।।

चेतनस्य सर्वज्ञस्य सर्वशक्तेः स्वतंत्रस्य शास्त्रैकसमधिगम्यस्य परिणामो व्यवस्थाप्यते। स हि स्वेच्छया स्वात्मानं लोकहितार्थे परिणमयन् स्वशक्त्यनुसारेण परिणमयति (२।१।१४ भास्करभाष्यम्)।

**जीवः**-जीवोऽणुरूपो ब्रह्मणोऽग्निविस्फुलिङ्गवदंशश्च। स जीवो ब्रह्मणोऽभिन्नो भिन्नश्च। तत्र जीवब्रह्मणोरभेदः स्वाभाविकः, भेदश्चोपाधिजन्यः स च भिन्नाभिन्नस्वरूपः। अभिन्नरूपं स्वाभाविकम्, औपाधिकं तु भिन्नरूपम् (भास्करभाष्यम् २।३।४३)।

उपाधेर्निवृत्तौ भेदो निरस्तो भवति। इयमेव मुक्तिः शुद्धपरमात्मरूपेणावस्थितिः। भास्करमतेन जीवब्रह्मणो भेदाभेदसम्बन्धः कार्यकारणवत् सम्बन्धमावहति। कार्यरूपेण नानात्वम्, कारणात्मनाऽभेदो भवति। यथा हेमात्मना अभेदः कटककुण्डलाद्यात्मना च भेदः सम्भवति-

कार्यरूपेण नानात्वमभेदः कारणात्मना।
हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा।।

**मुक्तिः**-भास्करस्तु मुक्तये ज्ञानकर्मसमुच्चयवादमूरीकरोति। नहि शुष्कादेव ज्ञानान्मुक्तेरुदयो भवति, अपि तु कर्मसंवलिताज्ज्ञानादेव। उपासनाया योगाभ्यासाद् वा ऋते ब्रह्मणोऽपरोक्षज्ञानं नैव लभ्यते साधकैः। भास्करो मुक्तेर्द्वैविध्यं समुद्गिरति-सद्योमुक्तिः, क्रममुक्तिश्च। कारणब्रह्मण उपासकाः साक्षात् सद्योमुक्तिं लभन्ते। कार्यब्रह्मण उपासकाः क्रममुक्तिं प्राप्नुवन्ति। अयं च तत्र क्रमः-कार्यब्रह्मणः समुपासकाः प्रथमतोऽर्चिरादिहिरण्यगर्भं प्राप्नुवन्ति। तत्र यावन्महाप्रलयस्तावत् स्थित्वा हिरण्यगर्भान्मुक्ता मुक्तिं लभन्ते। इयमेव क्रममुक्तिनाम्नाभिधीयते। मुक्तिविषयकं स्वीयमतं भास्करोऽत्रापि गीताभाष्ये बहुषु स्थलेषु प्रतिपादयति। विशेषतः ४।१८ श्लोकस्य अत्रत्यं विस्तृतं भाष्यं जिज्ञासुभिर्नितरां निभालनीयम् (पृ. ११४-११८)। एत एव भेदाभेदविषयकाः पदार्थाः गीताभाष्येऽप्यस्मिन् सुतरां चर्चिताः। भाष्यस्थपदार्थानां सम्यगवबोधायैतेऽत्र संक्षिप्ता वेदितव्याः।

भास्करमतानुयायिनः श्रीनिम्बार्काचार्यस्य भेदाभेदस्वरूपविमर्शो मया मन्निर्मिते भारतीयदर्शनाख्ये ग्रन्थे (पृ. ४९६-५०५; ७७३-७७४) पूर्वमेव विहितः। एतज्जिज्ञासुभिस्तत एवावलोकनीयम्। ग्रन्थविस्तरभिया नात्र बहुशः प्रपञ्च्यते। इत्थं वेदान्तनये भेदाभेदसम्प्रदायस्य कालतः प्राचीनता सिद्धान्तत आंशिकवैविध्यं च समुपलभ्यते। प्रख्यातानामेवैतद् विषयकाणामाचार्याणां मतान्यत्रोपन्यस्तानि तत्त्वजिज्ञासूनां भृशमुपकरिष्यन्तीति मन्महे।

## भास्करप्रणीता ग्रन्थाः

(१) **भगवद्गीताभाष्यम्**-सरस्वतीभवनग्रन्थमालायां वाराणसीतः प्रकाशितं भाष्यमिदं समग्रतया नैवोपलभ्यते। आदित आरभ्य नवमाध्यायस्य 'किं पुनर्ब्राह्मणाः पुण्या भक्ता

राजर्षयस्तथा' इति। ३३ संख्याकं श्लोकं यावदेव प्राप्तं वर्तते। अस्मिन् भाष्ये ग्रन्थकर्ता स्वीयं ब्रह्मसूत्रभाष्यमुल्लिखति। (२)-**ब्रह्मसूत्र भाष्यम्**-इदं ब्रह्मसूत्रभाष्यं १९१५ ईशवीये वर्षे सरस्वती-भवनपुस्तकालयस्य अध्यक्षपदं निर्वहद्भिर्महामहोपाध्यायपण्डित विन्ध्येश्वरीप्रसाद द्विवेदिभिर्महाभागैः सम्पादितं सत् प्राकाश्यमापेदे। अयमेव द्वितीयो ग्रन्थो भास्करस्य। अस्मिंश्च ग्रन्थे-छान्दोग्योपनिषदो भाष्यस्य समुल्लेखो वारद्वयं विहितोऽवलोक्यते-

(क) छान्दोग्ये च तत्र तत्र अनयोर्मायाप्रविलय-वादिनोर्निराकरणं विस्तरेण कृतमित्युपसंहियत इति (ब्रह्मसूत्रभाष्यम् १।४।२१)।

(ख) छान्दोग्ये चायमेवार्थोऽस्माभिः प्रदर्शितः (तत्रैव ३-३८)।

अनेन विवरणेदं स्पष्टं प्रतीयते यत् (३) छान्दोग्योपनिषद्भाष्यमपि भास्करस्य कृतिः। अतः आचार्य भास्करः त्रीन् भाष्यग्रन्थान् क्रमेण प्रणिनाय। प्रथमो ग्रन्थः छान्दोग्योपनिषद्भाष्यम्। (२) द्वितीयो ब्रह्मसूत्रभाष्यम् (३) तृतीयश्च-भगवद्गीताभाष्यमिति गीताभाष्यस्य समीक्षणेन भास्करस्याविर्भावकालं विशिष्टं दार्शनिकमतं च सम्यग् ज्ञातुं शक्यते।

## आविर्भावकालः

६।३३ (गीता) पद्यस्य अर्थवादतात्पर्यं प्रकाशयन् भाष्यकारो भास्करो जैमिनेरर्थवादसूत्रं निर्दिशति तथा भट्टपादमतं च तत्प्रणीतकारिकोल्लेखपुरःसरमित्थं प्रतिपादयति-

अर्थवादाः किल विध्येकवाक्यतया विधिशेषत्वेन निषेधशेषत्वेन च तत्तुत्यर्थास्तन्निंदार्था वा भवेयुरित्यर्थः। अर्थवादवाक्यानां पदार्थत्वात् स्वार्थे च तात्पर्या-(भावाद) दन्यपरत्वाच्चेति। तथा च भट्टपादैरेवोक्तम्-

व्याख्येयत्वाद् गुणवादेन योऽर्थवादादतत्परात्
अर्थेऽधिगन्तुमिष्येत कथं स्यात् तस्य सत्यता।।

(भास्कर-गीताभाष्यम् पृ. २०६)

इत्यनेन कथनेन भगवतो भास्करस्य कुमारिलभट्टादर्वाचीनतित्वं सिध्यति। ब्रह्मणःपरिणाममुपदिशति भास्करः। तथा चास्य ब्रह्मसूत्रस्थस्वीये भाष्ये (२।१।२४) तस्य मतमेवं निर्दिष्टम् ब्रह्म स्वत एव परिणमते तत्स्वाभाव्यात्। यथा क्षीरं दधिभावाय, अम्भो हिमभावाय। न तु तत्रापि किञ्चन आधारभूतं च द्रव्यमपेक्ष्यते। परिणामधारित्वेऽपि ब्रह्मणः स्वस्वरूपात् प्रच्युतिर्नैव जायते।

भास्करेण प्रतिपादितमतं ब्रह्मपरिणामवादं निन्दति न्यायकुसुमाञ्जलौ उदयनाचार्यः। अनेन भास्करस्य उदयनाचार्यात् (वस्वङ्कवसुवत्सरे ८९८ शकाब्दे = ९७६ ईशवीये सम्वत्सरे विद्यमानात्) पूर्वकालिकता सूच्यते। फलतः कुमारिलभट्टात् पश्चाद्वर्ती उदयनाचार्याच्च पूर्ववर्ती विराजतेऽयं भास्करः। फलतः खिष्टीय नवमशतके (८२५ ई.-८७५) तस्याविर्भाव-समयः समपद्यत इति ऐतिहासिकदृष्ट्या ग्रन्थपरीक्षणेन ध्रुवं निर्णेतुं पारयामः।

गीताभाष्यस्य प्रथमाध्यायस्य पुष्पिकायां भास्करो ग्रन्थस्याभिधानं निर्दिशति। तद् यथा-

इति श्रीमद्भगवद्गीतासु भगवद्भास्करकृते भगवदाशयानुसरणाभिधाने भाष्येऽर्जुनविषादो नाम प्रथमोऽध्यायः।

अनेन गीताभाष्यस्य ग्रन्थकर्तुर्मतेन 'भगवदाशयानुसरणाभिधानम्' इत्येव नाम जागर्ति। तन्मतेन भाष्यमिदं भगवतः श्रीकृष्णस्य भगवद्गीतोपदेष्टुः यः स्वाभिमत आशयोऽभूत्, तं स्वयमनुसरति। तमेव व्याख्यानेन प्रकटयति। दार्शनिकसमाजे भास्करः त्रिदण्डिमत-भाष्यकारत्वेन प्रसिद्धो वर्तते। तथा च न्यायकुसुमाञ्जलिप्रकाशे वर्धमानोपाध्यायानां 'भास्करस्त्रिदण्डिमतभाष्यकार इति वाक्यं प्रामाण्येन समुपस्थाप्यते तज्ज्ञैः। भास्करस्तु वैष्णव आसीत इति ७।१९ गीतास्थपद्यस्य भाष्ये स्फुटं प्रतीयते। स कथयति-

ज्ञानी पुनरेकभक्तिः प्रयोजनान्तर-निरपेक्ष-संन्यासकर्मयोगाभ्यां सम्पन्नो बहूनां जन्मनामन्ते मां प्रपद्यते। कथं प्रपद्यते! वासुदेवः सर्वमिति। वसन्ति तस्मिन् सर्वभूतानि वसति वान्तर्यामित्वेन सर्वभूतेष्विति वासुः देवनाद् द्योतनाद्देवः। वासुः चासौ देवश्चेति वासुदेवः परमात्मा।

ज्ञानकर्मसमुच्चयवादी आचार्योऽयं स्वीयसिद्धान्तानामभिव्यक्तये ग्रन्थत्रयं विरचितवान्। उपनिषद्-ब्रह्मसूत्र-भगवद्गीता इति प्रस्थानत्रयस्य स्वीयं भाष्यं निर्माय स स्वसिद्धान्तचयं वैशद्येन प्राकाटयत्।

उत्तरप्रदेश संस्कृत-संस्थानेन प्रकाश्यमानस्य बृहदितिहासस्यास्मिन् वेदान्त-खण्डे विद्यन्ते चत्वारो भागाः, तेषु प्रथमेऽद्वैतवेदान्तभागे समेऽप्यद्वैतसम्प्रदायाः सन्ति सप्रमाणं विवेचिताः। अस्य द्वितीये विशिष्टाद्वैतभागे विशिष्टाद्वैतमतस्य यावन्तो भेदाः प्रवर्तितास्तेषां, विशेषतो रामानुज-रामानन्दयोः सिद्धान्तस्य साम्यवैषम्ययोरालोचनमस्ति सयुक्तिकमतो विशेषोपयोगि इति मन्ये।

अस्य तृतीये 'सेश्वरवेदान्तविकास' नाम्नि भागे निम्बार्काचार्यस्य भेदाभेदमतस्य, मध्वाचार्यस्य द्वैतमतस्य, वल्लभाचार्यस्य शुद्धाद्वैतमतस्य, विज्ञानभिक्षोर्विज्ञानामृतभाष्यस्य, कृष्ण-चैतन्यस्य वेदान्तमतस्य च साङ्गोपाङ्गं वर्णनं दर्शनतत्त्वजिज्ञासूनां कृते नितान्तं श्रेयस्करं वरीवर्ति।

अस्य चतुर्थे 'गीतायोगवासिष्ठ' भागे सन्ति भगवद्गीतायाः समस्तान्यपि व्याख्या-साहित्यानि ऐतिहासिक-दार्शनिकदृशा समालोचितानि। अत्रैव च योगवासिष्ठवेदान्तसिद्धान्तोऽपि प्रमाणपुरस्सरं विस्तरेण प्रतिपादितो विद्यते।

अस्य वेदान्त-खण्डस्य लेखानां सर्वेऽपि लेखकाः सन्ति विविधशास्त्रेषु कृतभूरिश्रमा, दर्शनतत्त्वमर्मज्ञा मनीषिण इति तेभ्यः सर्वेभ्यः साधुवादान् वितरन् परां मुदमनुभवाम्यहम्।

अस्य वेदान्त-खण्डस्य सम्पादको दर्शनशास्त्रैकनिष्णातः प्रो. सङ्गमलाल पाण्डेयमहोदयो विशेषरूपेण धन्यवादार्हो यस्य वैदुष्यपूर्णे सम्पादकत्वे ग्रन्थोऽयं प्राकाश्यं नीतो नितरां चकास्ति।

ग्रन्थस्यास्य सम्पादने प्रकाशने च ममान्तेवासी झोपनामको डॉ. रमाकान्तोऽपि साहाय्यमकरोदिति तमप्याशीर्वचोभिः संयोजयामीति शम्।

व्यास पूर्णिमा
३०। ७। १९९६

बलदेव उपाध्यायः
विद्या विलासः
रवीन्द्रपुरी, वाराणसी

# संपादकीय प्रस्तावना

नत्वा सरस्वतीं देवीं तदभिधां च मातरम्।
सर्ववेदान्तसाहित्यं सुधां मथ्नाति सङ्गमः।।

## १. वेदान्तो नाम उपनिषत्प्रमाणम्

संहिता-ब्राह्मणारण्यकोपनिषद इति वेदभागाः। उपनिषच्चातो वेदस्यान्तिमो भागोऽस्ति। ततश्च सा वेदान्तः श्रुत्यन्तो वाभिधीयते। क्वचित् पाठतोऽर्थतश्च उपनिषद् वेदस्यान्तिमो भागः, यथा ईशावास्योपनिषत् शुक्लयजुर्वेदस्यान्तिमोऽध्यायोऽस्ति। न च सर्वा उपनिषदस्तथाभूताः। तथापि अर्थतस्तात्पर्यतो वा सर्वोपनिषदो वेदान्त एव, ब्रह्मवादनिरूपकत्वात् ब्रह्मप्राप्तिसाधनभूतत्वात् मोक्षपरकत्वाच्च। एवं वेदान्तस्य अर्थः औपनिषदं दर्शनं जातम्। तदेव वेदार्थसंग्रह इति भगवता रामानुजाचार्येण स्वकीये वेदार्थसंग्रहाख्ये ग्रन्थे प्रतिपादितम्। वेदान्तो नाम उपनिषत्प्रमाणमिति वेदान्तसारे सदानन्दयतिना स्थापितम्।

उपनिषदां संख्या त्वनियता। अधुना उपनिषत्संग्रहे १८८ उपनिषदः प्रकाशिताः क्वचित् २२० उपनिषदां सूच्यपि विद्यते। मुक्तिकोपनिषदि च अष्टोत्तरशतोपनिषदां नामोल्लेखोऽस्ति। तत्र चोक्तम्

"माण्डूक्यमेकमेवालं मुमुक्षूणां विमुक्तये।
तथाप्यसिद्धं चेज्ज्ञानं दशोपनिषदं पठ।।" इति।।

दशोपनिषदश्च तत्रैव

"ईशकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरिः।
ऐतरेयं च छान्दोग्यं बृहदारण्यकं तथा।।" इत्येताः।

माण्डूक्योपनिषद्दर्शनव्याख्यानं गौडपादाचार्यैः माण्डूक्यकारिकाख्ये ग्रन्थे आगमशास्त्राख्ये ग्रन्थे वा कृतम्। उक्तदशोपनिषद्दर्शनव्याख्यानं भगवत्पादशंकराचार्यैः दशोपनिषद्भाष्येषु कृतम्। उपनिषच्छ्रवणं वेदान्तस्य प्रथमं सोपानम्।

तत्र किम् औपनिषदं दर्शनमेकम्? किं वा प्रत्युपिनषदं तद् भिन्नमिति प्रश्नः। प्रतिवेदशाखं यथोपनिषदां भिन्नत्वं किं तथैव प्रतिवेदशाखम् औपनिषदं दर्शनमपि भिन्नमिति च प्रश्नः। प्रतिवेदशाखं यथोपषिदां भिन्नत्वं किं तथैव प्रतिवेदशाखम् औपनिषदं दर्शनमपि भिन्नमिति च प्रश्नः। तत्र आचार्य-बादरायणेन प्रतिपादितं स्वकीय-ब्रह्मसूत्राख्ये ग्रन्थे यत् सर्वोपनिषदामेकमेव

दर्शनं तच्च ब्रह्मसूत्राख्ये ग्रन्थे वर्णितमस्ति। अस्मिन् ब्रह्मसूत्रे आचार्य जैमिनि- बादरि-काशकृत्स्नात्रेय-कार्ष्णाजिन्याश्मरथ्यौडुलोमयः ब्रह्मसूत्रकारत्वेन स्मृताः। किन्तु सम्प्रति तेषां ब्रह्मसूत्राणि नोपलभ्यन्ते। बादरायणब्रह्मसूत्रस्य अखिलशाखीय सर्वोपनिषद् दर्शनवर्णनत्वात् अन्येषां च सूत्राणां केवलं प्रतिशाखीयोपनिषद्वर्ण्यविषयत्वाच्च जैमिनिप्रभृतीनां ब्रह्मसूत्राणां लोपोऽजायत बादरायणकृत ब्रह्मसूत्रस्य च प्रचारोऽभूदिति केचित्। तथात्वे सत्यधुना यद् ब्रस्मसूत्रदर्शनं तदेव सर्वोपनिषदां दर्शनं वेदान्तभूतमिति स्थितिः। शारीरकमीमांसासूत्रं वेदान्तसूत्रं, ब्रह्ममीमांसासूत्रं चेति ब्रह्मसूत्रस्येव अपरनामानि। वेदान्तवाक्य-कुसुमग्रथनार्थात्सूत्राणामिति शंकराचार्यैर्ब्रह्मसूत्रलक्षणं निर्दिष्टम् स्वकीये शारीरकभाष्ये।

ब्रह्मसूत्रदर्शनमेव वेदान्त इति परम्परा भगवत्पादशंकराचार्येण स्थापिता। इदमेव वेदान्तस्य द्वितीयं सोपानं मननाख्यं न्यायाख्यं वा कथ्यते। श्रुत्यर्थस्य मनने ब्रह्मसूत्रस्योपयोगित्वात् ब्रह्मसूत्रमननमेव मननप्रक्रियात्वेन प्रसिद्धं जातम्। ततश्च तृतीयं सोपानं निदिध्यासनाख्यं सुकरं भवति। ब्रह्मविद् ब्रह्मैव भवतीति श्रुतेः तृतीयसोपानस्य समाप्तिर्भवति।

शंकराचार्यादनन्तरं भास्कर-रामानुज-निम्बार्क-मध्व-विज्ञानभिक्षु-रामानंदश्रीकण्ठ-श्रीपति-वल्लभ-बलदेव-विद्याभूषणादयः आचार्या ब्रह्मसूत्रभाष्यं व्यरचयन्। तेषामपि दर्शनं वेदान्त इति सर्वेषां मतम् ब्रह्मसूत्रपरकत्वात्तेषाम्। स्व-स्वदर्शनं भगवद्गीताभाष्यैः उपनिषद्भाष्यैश्च समर्थ्यते आचार्यैः। स्वयं भगवत्पादशंकराचार्यैरपि भगवद्गीताभाष्यं ब्रह्मसूत्रभाष्यमुपनिषद्भाष्यं च कृत्वा वेदान्तस्य प्रस्थानत्रयी स्थापिता। श्रुतिप्रस्थानं (उपनिषदः), स्मृतिप्रस्थानं (भगवद्गीता), न्यायप्रस्थानं (ब्रह्मसूत्रम्) चेति प्रस्थानत्रयी। तदुद्भूतो वेदान्त इति विद्वद्भिर्मतम्। प्रस्थानत्रयेऽपि ब्रह्मसूत्रस्य महत्त्वं सर्वातिशायि इति निर्विवादः। तदेव वेदान्तस्य मुख्यो ग्रन्थः। तस्योपरि यद्भाष्यसाहित्यमस्ति तस्य वर्णनमस्मिन् ग्रन्थे तत्तदध्यायेषु विद्वद्भिः क्रियते। अतस्तत् तत्रैव द्रष्टव्यमिति।

## २. पुरातनवेदान्तः

शंकराचार्यात्प्राक् यो वेदान्तोऽभूत् स पुरातनवेदान्तोऽभिधीयते। अधुना ब्रह्मसूत्रं माण्डूक्यकारिकेति ग्रन्थद्वयमेव पुरातनवेदान्तग्रन्थत्वेन उपलभ्यते। तत्र माण्डूक्यकारिका-प्रणेता गौडपादाचार्यः भगवत्पादशंकराचार्यस्य परमगुरुर्गोविन्दपादस्य च गुरुरासीदिति भगवत्पादशंकराचार्यग्रन्थैः तच्छिष्यसुरेश्वराचार्यग्रन्थैश्च सिद्धम्। तस्य दर्शनमद्वैतवाद इत्यपि निश्चितम्। किन्तु ब्रह्मसूत्रस्य किं दर्शनमित्यत्र विवादः। सर्वप्रथमं गोस्वामिपुरुषोत्तमाचार्येण शंकराचार्यशारीरकभाष्य-रामानुजश्रीभाष्यमध्वाचार्य-ब्रह्मसूत्रभाष्य-वल्लभाचार्याणुभाष्यादीनां तुलनात्मकं समीक्षात्मकमनुशीलनं कृत्वा निर्धारितं यत् वल्लभाचार्यस्य शुद्धाद्वैतवाद एव ब्रह्मसूत्रकारबादरायणस्य मतमासीत्। विंशशत्यां शुद्धाद्वैतवादिमूलचन्द्रतुलसीदास-तैलीवालामहाभागेन इदमेव मतं स्वयुक्तिभिः पुनः प्रतिपादितम्। अपरं च डाक्टर जार्जथीबो महाभागेन शारीरकभाष्यश्रीभाष्ययोस्तुलनात्मकमनुशीलनं कृत्वा निश्चितम् यत् श्रीभाष्यमेव

सर्वथा बादरायणब्रह्मसूत्रमनुसरति। तस्मात् विशिष्टाद्वैतवादो ब्रह्मसूत्रदर्शनमिति निश्चीयते। किन्तु तदितरे न सहन्ते। डाक्टर बी.एस. घाटेमहाभागेन शंकररामानुजमध्वनिम्बार्क-वल्लभभाष्याणां तुलनात्मकमनुशीलनं कृत्वा निश्चितं यत् कदाचित् निम्बार्कभाष्यमेव ब्रह्मसूत्रदर्शनमिति। इत्थं द्वैताद्वैतवादो ब्रह्मसूत्रदर्शनं निश्चीयते। परन्तु तदपि न रुचिकरम्। प्राचीनत्वात् अविच्छिन्नपरम्परानुसरणमूलत्वात् सर्वथोपनिषद्दर्शनानुकूलत्वात् सर्वश्रुतिसंग्राह-कत्वात् श्रुति-स्मृति-युक्ति-पुराणेतिहाससिद्धत्वाच्च अद्वैतवाद एव बादरायणस्य दर्शनमिति अस्मादृशानां बहूनां विचारकाणां मतम् ब्रह्मसूत्रस्य व्याख्यानं कथं विभिन्नैराचार्यैः क्रियत इति अस्मिन् ग्रन्थे तत्तदध्यायेषु द्रष्टव्यम्।

जैमिनिबादरिप्रभृतीनां दर्शनमपि पुरातनवेदान्त इति सर्वेषां मतम्। किन्तु यतः तेषां ग्रन्था नोपलभ्यन्ते, न किंचिदत्र वक्तुं शक्यम्। अपि च शंकराचार्यसुरेश्वराचार्यानन्दगिरि-प्रभृत्यद्वैतवादिनां ग्रन्थेषु उपवर्ष-सुन्दरपाण्ड्य-ब्रह्मनन्दि-द्रविडाचार्य-भर्तृप्रपंच-भर्तृहरि भर्तृमित्र-ब्रह्मदत्तादीनां पुरातनवेदान्तिनां कानिचित् वाक्यानि उद्धृतानि। एवमेव भगवद्बोधायनटंकद्रमिडगुहदेवकपर्दिभारुचि प्रभृत्यवगीतशिष्टपरिगृहीतपुरातनवेदान्तव्याख्यान-सुव्यक्तार्थ-श्रुतिनिकरनिदर्शनोऽयं पन्था इति रामानुजाचार्येण वेदार्थसंग्रहे लिखितम्। अतो बोधायनादयोऽपि पुरातनवेदान्तिन इति ज्ञायते। किन्तु तेषां कोऽपि ग्रन्थो नोपलभ्यते। तेषां यानि कानिचिद् वाक्यानि रामानुजादिग्रन्थेषु प्राप्यन्ते तान्याश्रित्यात्र ग्रन्थे किंचिद् विचारितमस्ति। तच्च द्रष्टव्यं तत्र।

पुरातनवेदान्ते बहवः प्रश्नाः सन्ति। अत्र केवलमेकः प्रश्नः संक्षेपेण विचार्यते। तत्र किं बोधायनः उपवर्षस्यैव अपरनामेति प्रश्नः। नेति अस्माकं मतम्। यतो हि बोधायनो ब्रह्मसूत्रवृत्तिकारत्वेन रामानुजसम्प्रदाय-रामानन्दसंप्रदाययोः स्मर्यते। उपवर्षश्च अद्वैत-वेदान्तसम्प्रदाये ब्रह्मसूत्रवृत्तिकारत्वेन ज्ञायते। पंचपादिकायां पद्मपादेन वृत्तिद्वयं सूचितम्। अतएव द्वावपि वृत्तिकारौ भिन्नौ। बोधायनो विशिष्टाद्वैतवादी आसीत् उपवर्षश्चाद्वैतवादीति निश्चीयते। प्रपंचहृदये उपांगप्रकरणे लिखितम् -

"सांगोपांगस्य वेदस्य पूर्वोत्तरकाण्डसंभिन्नस्याशेषवाक्यार्थविचारपरायणं मीमांसाशास्त्रम्। तदिदं विंशत्यध्यायनिबद्धम् तत्र षोडशाध्यायनिबद्धं पूर्वमीमांसाशास्त्रं पूर्वकाण्डस्य धर्मविचारपरायणं जैमिनिकृतम्। तदन्यदध्यायचतुष्कमुत्तरमीमांसाशास्त्रमुत्तरकाण्डस्य ब्रह्मविचारपरायणं व्यासकृतम्। तस्य विंशत्यध्यायनिबद्धस्य मीमांसाशास्त्रस्य कृतकोटिनामधेयं भाष्यं बोधायनेन कृतम्। तद्ग्रन्थबाहुल्यभयादुपेक्ष्य किंचित् संक्षिप्तम् उपवर्षेण कृतमिति। अतः बोधायनोपवर्षयोर्भिन्नत्वं सिद्धम्

अपरं च किं व्यास इति बादरायणस्यैव अपरनामेति प्रश्नः। पुनः को व्यासः? किं स महाभारतकारः? किं महाभारतकार एव ब्रह्मसूत्रकार इति प्रश्नः। अत्र शंकराचार्येण निर्दिष्टं यत् ब्रह्मसूत्रकृत्तु बादरायणः। तेन व्यासबादरायणयोरभेदो न कृतः। किन्तु भामतीकारवाचस्पतिमिश्रेण अयमभेदः स्वीक्रियते। अन्यासु च परम्परासु अयमभेदः सत्यत्वेन

प्रतिष्ठितः। किन्तु ब्रह्मसूत्रकारो व्यास एव महाभारतकार इति विवादविषयः। प्रमाणाभावादत्र न किंचिद् वक्तुं शक्यम्। व्यासशब्दस्य उपाधिभूतेन स्वीकार्यत्वात् तस्य निर्देशः कस्मिन् व्यासे इति निर्णयासम्भवत्वात्।

ब्रह्मसूत्ररचनाकालः ईसवीयद्वितीयशतीति आचार्यकीथमहाभागेन निश्चितम् तत्र सर्वास्तिवाद- योगाचारदर्शनयोः स्पष्टोल्लेखात् प्रथमशत्यां हीनयानमहायान- विभागाविर्भावत्वाच्च। किन्तु याकोबीमहाभागेन तस्य रचनाकालः ईसवीयतृतीयशतीतः ४५० ईसवीयपर्यन्तम् कस्मिंश्चित् समये निश्चितः, तदैव बौद्धदर्शननिरूपणत्वात् दर्शनशास्त्ररूपेण। परन्तु यतः शून्यवादोल्लेखो ब्रह्मसूत्रे न विद्यते ततः ईसापूर्वद्वितीयशतीति ब्रह्मसूत्रकालो मयाऽन्यत्र निश्चितः प्रि-शंकराद्वैतफिलासफीति ग्रन्थे। सांख्यवैशेषिकबौद्धजैनपाशुपतपांचरात्राणां चोद्भवस्ततः पूर्वत्वात् तेषां वर्णनं ब्रह्मसूत्रकृता सर्वथा तत्कालानुकूलमिति स्पष्टम्।

पुनश्च रामायण-महाभारतप्राचीनपुराणेषु क्वचित् क्वचित् वेदान्तनिरूपणं दृश्यते। तदपि पुरातनवेदान्त इति केचित्। किन्तु पद्मपुराणादिषु शंकराचार्यमायावादः असच्छास्त्रत्वेन वर्णितः, शंकराचार्यश्च प्रच्छन्नबौद्ध उक्तः। अतएव तेषां प्रणयनं शंकरोत्तरकालेऽभवदिति निर्विवादः। अपरं च यतो हि भगवद्गीता वेदान्तस्य स्मृतिप्रस्थानत्वेन स्वीक्रियते, सा च महाभारतार्थसंग्रहभूताभिमता, अतएव तदुपजीव्यः महाभारतांशः पुरातनवेदान्त इति निश्चितम्।

## ३. अथ शंकराचार्यस्य अद्वैतवेदान्तः

सम्प्रति शंकराचार्यस्य आविर्भावकालः प्रायेण ७८८-८२० ईसवीयकालो मन्यते। तस्य द्वादशजन्मशतीसमुत्सव अनया गणनया १९८८ ईसवीयाब्दे समजायत। अस्य कालनिर्णयस्य आधारः के.बी. पाठकमहाभागेन बेलग्रामात् प्राप्तः पृष्ठत्रयात्मको हस्तलिखितो ग्रन्थः। तस्मिन् उक्तम्-

"दुष्टाचारविनाशाय प्रादुर्भूतो महीतले।<br>
स एव शंकराचार्यः साक्षात् कैवल्यनायकः।।<br>
निधि नागेभवह्न्यब्दे विभवे शंकरोदयः।<br>
अष्टवर्षे चतुर्वेदान् द्वादशे सर्वशास्त्रवित्।<br>
षोडशे कृतवान् भाष्यं द्वात्रिंशे मुनिरभ्यगात्।<br>
कल्पब्दे चन्द्रनेत्राङ्क वह्न्यब्दे गुहाप्रवेशः।<br>
वैशाखे पूर्णिमायान्तु शंकरः शिवतामियात्।। इति

तत्र निधिनागेभवह्न्यब्दे ७१० शकाब्दम्। तच्च ७८८ ईसवीयाब्दम्। एवमेव पण्डित गोपीनाथकविराजेन कृष्णब्रह्मानन्दकृतशंकरविजये निम्नश्लोकौ लब्धौ -

निधि नागेभवह्न्यब्दे विभवे शंकरोदयः।
कलौ तु शालिवाहस्य सखेन्दुशतसप्तके।। (७१०)
कल्पब्दे भूद्गंकाग्निसम्मिते शांकरो गुरुः।
शालिवाहशके त्वक्षिसिन्धुसप्तमितेऽभ्यगात्।। इति।।

एताभ्यां श्लोकाभ्यामेव उपर्युक्तमतं समर्थ्यते। किन्तु काशीनाथ त्र्यम्बक तैलंगमहाभागस्तन्न सहते। उपलब्धहस्तलिखितग्रन्थस्यार्वाचीनत्वात् अप्रामाणिकत्वाच्च पाठकमहोदयस्य मतं तेन निरस्यते। केरलोत्पत्तिग्रन्थमाश्रित्य ४०० ईसवीयाब्दं शंकराचार्यस्य जन्माब्दं तेन निश्चितम्। तदपि न समीचीनम्। शंकरस्य शारीरकभाष्ये धर्मकीर्तिवचनोद्धरणत्वात् तस्य धर्मकीर्तिकालादपरत्वं सिद्धम्। वाचस्पतिमिश्रस्य कालश्च निश्चितो यतो हि तेन ८४१ ईसवीये न्यायसूचीनिबन्धो रचित इति तेनैव लिखितम्। तेन शारीरकभाष्यटीका भामती लिखिता। अतः शंकराचार्यस्य कालः ८४१ ईसवीयाब्दतः प्रागिति निश्चितम्। धर्मकीर्तिकालश्च प्रायः ५६० ईसवीयाब्दम्। अपरं च शंकराचार्यः नृपतिपूर्णवर्मणः समकालिक इति तस्य ग्रन्थे पूर्णवर्मोल्लेखतः अवधार्यते। कनिंघमहोदयेन पूर्णवर्मणः कालः ५६०-६३० ईसवीये निश्चितः। अतएव शंकराचार्यस्य आविर्भावः ६३० ईसवीयाब्दं निकषाऽभवदिति विज्ञायते। मयापि अन्यत्र पूर्वोद्धृतग्रन्थे प्रतिपादितम् यत् यदा गौडपादः परमवृद्धोऽभूत् तदा शंकराचार्यो युवा आसीत्। एवं स गौडपादस्य कनिष्ठसमकालिकः। अनेन हेतुनापि तस्य कालः ६३० ईसवीयाब्दं निकषा प्रतिभाति। अतः परं निश्चयत्वेनात्र न किंचिदन्यद् वक्तुं शक्यमिति अलं विस्तरेण। शंकराचार्यचरितज्ञानार्थम् अनन्तानन्दगिरि- विद्यारण्यप्रभृतिविरचितशंकरदिग्विजयादयो ग्रन्थाः द्रष्टव्याः। हिन्दीभाषायां चाचार्यबलदेवोपाध्यायकृतो ग्रन्थोऽवलोकनार्हश्च।

शंकराचार्यकृता बहवो ग्रन्थाः प्रसिद्धाः। किन्तु तेषु दशोपनिषद्भाष्यं, गीताभाष्यं, शारीरकभाष्यम् उपदेशसाहस्री चेति त्रयोदशग्रन्था एव तत्प्रणीताः प्राधान्येन स्वीक्रियन्ते। तत्कृतित्वेन प्रसिद्धा अन्ये ग्रन्थास्तस्यानुयायिभिः कृताः। अधुना योगभाष्यविवरणं तस्य कृतित्वेन प्रस्तूयते। किन्तु अत्र विवादोऽपि वर्तते। इत्थं सौन्दर्यलहरीप्रभृतिग्रन्थेष्वपि विवादः। कदाचित् एतादृशाः सर्वे ग्रन्थाः परवर्तिजगद्गुरुशंकराचार्यैः विरचिताः। ते च शंकराचार्यस्थापितमठानामध्यक्षाः आसन्। अतएव एते ग्रन्था अपि अद्वैतवेदान्तमेव पुरस्कुर्वन्ति। पुनश्च शंकराचार्येण प्रतिपादितं यत् ब्रह्ममीमांसा जैमिनेः कर्ममीमांसायाः स्वतन्त्रास्ति। इत्थं कर्ममीमांसाब्रह्ममीमांसयोरैक्यशास्त्रत्वं नास्ति। कर्ममीमांसा पूर्वमीमांसा वा द्वादशलक्षणीवेत्युच्यते चतुरध्यायसत्वात्। इत्थं षोडश-लक्षणी मीमांसा अस्तीति वैष्णववेदान्तिनः। शंकराचार्यप्रभृत्यद्वैतिभिश्च चतुर्लक्षणी ब्रह्ममीमांसा द्वादशलक्षणीमीमांसातो भिन्ना स्वतन्त्रा चेति स्वीकृतम् विषयप्रयोजनफलभेदाच्च तयोः। किन्तु तन्मतं वेदान्तदेशिकादयो विशिष्टाद्वैतवादिनो न सहन्ते। ते उभयमीमांसयोरैक्यशास्त्रम् प्रतिपादयन्तीति। वेदान्तदेशिकश्च वदति यत् अस्मिन् ऐक्यशास्त्रे चतुर्लक्षणी संकर्षणमीमांसापि समाविष्टा वर्तते। संकर्षणमीमांसा आचार्य काशकृत्स्नविरचितेत्यपि वेदान्तदेशिकस्य मतम्। किन्तु न च तद् इतिहाससिद्धम्।

शंकराचार्यस्य अद्वैतवेदान्तः कीदृशः? तस्य च विकासः कथमद्यावधि जात इति सर्वमद्वैतवेदान्ताध्यायेऽत्र वर्णितम्। तच्च तत्रैव द्रष्टव्यम्।

## ४. किं शंकराचार्यः प्रच्छन्नबौद्धः?

भास्कर-रामानुज-मध्ववेदान्तदेशिकादयो वैष्णवाचार्या आमनन्ति यत् शंकराचार्यः प्रच्छन्नबौद्धोऽस्ति। पद्मपुराणे चोक्तम्-

मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव तदिति। एवं रूपेण सकर्मकेण ज्ञाधात्वर्थेन सर्वलोकसाक्षिणमपरोक्षमवभासमानेन ज्ञानमात्रमेव परमार्थत इति साधयन्तः सर्वलोकोपहासकारणं भवन्ति वेदवादच्छद्मप्रच्छन्नबौद्धनिराकरणे निपुणतरं प्रपंचितमिति रामानुजाचार्येण श्रीभाष्ये (२।२।२७)सूत्रभाष्ये निगदितम्। भेदाभेदवादिना यादवप्रकाशेन चोक्तम्

**वेदोऽनृतो बुद्धकृतागमोऽनृतः प्रामाण्यमेतस्य च तस्य चानृतम्**
**बौद्धाऽनृतो बुद्धिफले तथानृते यूयं च बौद्धाश्च समान संसद इति।**
**मध्वाचार्येणाणुभाष्ये (२।२।२६) सूत्रभाष्ये लिखितम्**

**यच्छून्यवादिनः शून्यं तदेव ब्रह्मवादिनः।**
**नहि लक्षणभेदोऽस्ति निर्विशेषस्त्वतस्तयोरिति।**

उदयनाचार्य-विज्ञानभिक्षुप्रभृतिभिरपि एता युक्तयः परिपुष्टाः। केचिदर्वाचीनविद्वांसोऽपि तासां पुनरुक्तिं कुर्वन्ति।

किन्तु अद्वैतवेदान्तिन इमम् आरोपं निराकुर्वन्ति। स्वयं भगवत्पादशंकराचार्येण शारीरकभाष्ये बौद्धमतं निराकृतम्। शून्यवादो विज्ञानवादोऽथवा सर्वास्तिवाद इति सर्वं तेन निरस्तम्। अतो न स प्रच्छन्नबौद्ध इति निष्पक्षसमीक्षकाणामभिमतम्। अद्वैतवेदान्तपरम्परापि अद्वैतवेदान्त-बौद्धमतभेदं प्रदर्श्य शंकराचार्यस्य प्रच्छन्नबौद्धत्वं निराकरोति। तथाहि आचार्यपद्मपादेनोक्तम्-किन्तु ग्राहकस्य अहंकारकर्तुरात्मनोऽभावे। स चैकरूपोऽनुभवाद् युक्तिबलाच्च प्रसाधित इति बौद्धमते आत्मनः क्षणिकत्वमद्वैतमते च तस्य एकरूपत्वं नित्यत्वं च प्रसाधितम्। अतएव वेदान्तवादविज्ञानवादयोरभेदो नास्ति। वाचस्पतिमिश्रामलानन्दमतमनुसृत्य अप्पयदीक्षितेन चोक्तम्-नहि विज्ञानवादिनः अस्माभिरव जगदनिर्वचनीयमिति उच्यते (परिमले २।२।२) टीकायाम् इति। एवमेव खण्डनखण्डखाद्यकृता श्रीहर्षेण स्थापितम्-

विज्ञानव्यतिरिक्तं पुनरिदं विश्वं सदसद्भ्यां विलक्षणं ब्रह्मवादिनः संगिरन्ते (खण्डनखण्डखाद्यस्य प्रथमपरिच्छेदे) इति। तथा च जगतः आत्मना सह अनन्यत्वं सिद्धं वेदान्तमते बौद्धमते च जगतः आत्मनो भिन्नत्वं विज्ञानाकारत्वं च। एवमेव विवरणाचार्यैरुक्तम्-अस्ति चात्र महान् सिद्धान्तभेदः।

क्षणिकाद् विज्ञानाद् भेदेन अर्थक्रियासामर्थ्यसत्त्वशून्यं विषयमाहुर्विज्ञानवादिनः तत्त्वदर्शिनस्तु

अद्वितीयात् संवेदनादभेदेऽपि विषयस्य भेदेनाप्यर्थक्रियासामर्थ्यसत्त्वं स्थायित्वं चाबाधितमस्तीति वदन्ति (पंचपादिका विवरणस्य ३ १७ पृष्ठे) इति।

पुनश्च शून्यवादिनां शून्यः चतुष्कोटिविनिर्मुक्तोऽस्ति वेदान्तिनां च ब्रह्म सदस्ति। शून्यश्च ज्ञेयो ब्रह्म च ज्ञानमिति महान् भेदः शून्यवादवेदान्तवादयोः। अतएव अद्वैतवादिनो न प्रच्छन्नबौद्धाः सन्ति। वस्तुतस्तु बौद्धमतमेव उपनिषत्प्रभवत्वाद् अद्वैतमतवत् केषुचित् विषयेषु प्रतीयते इति कुमारिलभट्टप्रभृतीनां प्राचीनाचार्याणाम् मतम्। अधुनापि डाक्टर राधाकृष्णनूप्रभृतिभिरिदमेव मतं स्वीक्रियते। मायावादस्य उपनिषत्प्रभत्वमपि रामचन्द्र-दत्तात्रेयरानाडेप्रभृतिदार्शनिकैः आधुनिकसमये सम्यक् प्रतिपादितमित्यपि विज्ञेयम्। ज्ञानमार्गश्च औपनिषदः सिद्धान्त इति मध्वाचार्यप्रभृतिब्रह्मसूत्रभाष्यकारैरपि ग्राह्यते। अतएव अद्वैतवेदान्तः सर्वथा औपनिषदं दर्शनम् मूलवेदान्तश्चेति सिद्धम्। चिरकालात् स मुख्यो वेदान्त इति प्रसिद्धेः। इतरश्च वेदान्त उपचरितार्थे वेदान्त इत्यभिधीयते। परमार्थतः स वैष्णवो वेदान्त इति नाम्ना प्राधान्येन प्रसिद्धः।

## ५. अथ विशिष्टाद्वैतवादः

विशिष्टाद्वैतवादस्य प्रवर्तको बोधायनः। स हि ब्रह्मसूत्रस्य बृहट्टीकां चकार। किन्तु सा टीका नोपलभ्यते। तस्याः संक्षेपो भगवद्रामानुजाचार्येण श्रीभाष्ये कृतः। ततश्च विशिष्टाद्वैतवादप्रवाहो वृद्धिं गतः। अद्यावधि च स प्रचलति।

विशिष्टाद्वैतवादिनो ब्रह्म चिदचिद्विविशिष्टमस्तीति वदन्ति। जगतः सत्यत्वं ब्रह्म-परिणामवादः प्रकृतेर्ब्रह्माश्रितत्वं, प्रकृतेश्च महदादिसांख्यीयतत्त्वानामाविर्भाववाद इत्यादीनि बहुमतानि तेषाम्। तानि सर्वाणि अत्रैव रामानुजमतमाश्रित्य वर्णितानि।

विशिष्टाद्वैतवादोऽपि द्विविधः, आद्योऽपि द्विविधः शिवपारम्यवादः शक्तिपारम्यवादश्च। प्रथमः श्रीकण्ठभाष्यमाश्रित्य अत्रैव वर्णितः। शक्तिविशिष्टाद्वैतवादश्च द्विविधः वीरशैवमतशाक्तमतभेदात्। उभावपि अत्र वर्णितौ। पुनश्च वैष्णवविशिष्टाद्वैतवादः त्रिविधः, रामानुज-रामानन्द-स्वामिनारायण-भेदात्। चरमौ द्वावपि रामानुजमतस्यैव शाखाभूताविति इतिहासविदः। रामानन्दवेदान्तो रामानुजवेदान्ताद् भिन्न इति केचित् आधुनिकरामानन्दवेदान्तिनः। स्वामिनारायणवेदान्तश्च नव्यविशिष्टाद्वैतवाद इति स्वामिनारायणानुसारिणः। सर्वेऽपि विशिष्टाद्वैतवादिनः अद्वैतमतं निराकुर्वन्ति। अतः तेषां मुख्यो विवादः अद्वैतवेदान्तिभिः सह अजायत। अस्मिन् ग्रन्थे तत्तदध्यायेषु विशिष्टाद्वैतवादस्य प्रगतिः अद्वैतविशिष्टाद्वैतयोश्च विवादः द्रष्टव्यौ।

## ६. अथ सेश्वरवेदान्तस्य उदग्रवैभवम्

निम्बार्कमध्वादिभिः सेश्वरवेदान्तस्य उदग्रवैभवम् कृतम्। यद्यपि विशिष्टाद्वैतवादः सेश्वरवेदान्तोऽस्ति तथापि अन्ये ईश्वरवादिनस्तं न सहन्ते। भास्कर-निम्बार्क-

मध्व-विज्ञानाभिक्षु-वल्लभ-बलदेव विद्या-भूषणादयः स्वस्ववेदान्तं प्रतिपादयन्ति। भास्कर-निम्बार्कौ द्वैताद्वैतवेदान्तिनौ, मध्वो द्वैतवेदान्ती, वल्लभः शुद्धाद्वैतवेदान्ती बलदेवविद्याभूषणश्च अचिन्त्यभेदाभेदवेदान्ती। विज्ञानभिक्षुमतं अविभागाद्वैतवादः। एतानि सर्वाणि मतानि अस्मिन् ग्रन्थे पृथक्पृथगध्यायेषु वर्णितानि। एतेभ्य ईश्वरवादस्य अद्भुतोत्थानमभवत्। ईश्वरस्य सगुणत्वं जगतः सत्यत्वम् भक्तिमार्गस्य सायुज्यलाभः सहायत्वम् इत्यादीनि मतानि सर्वैः अनुमोदितानि। श्रीकृष्णः परमेश्वरः अवतारी चेति तेषां निश्चयः! एतेन कृष्ण-भक्तिस्तद्विकासश्च बहुधैव अभवताम्। तस्सर्वं तत्तदध्यायेषु अत्र द्रष्टव्यमिति। डाक्टर रामकृष्णगोपाल भण्डारकरमहादयैः प्रतिपादितम् यत् वैष्णवमतस्य क्रमिकविकासो रामानुजादनन्तरम् चतुर्विधो जातः, मध्व-निम्बार्क-वल्लभचैतन्यमतावतारात्। यथा रामानुजाचार्येण नारायणपारम्यवादः स्थापितः तथा मध्वादिभिः कृष्णपारम्यवादः प्रतिपादितः। श्रीकृष्णः परमब्रह्मेति मध्वाचार्यः। स किशोरः सदा राधया सह वर्तत इति निम्बार्काचार्यः। स बालः यशोदानन्दनो बालगोपाल इति वल्लभाचार्यः। राधामाधवरूपेण एक एव श्रीकृष्णः परमदैवतमिति चैतन्यमहाप्रभुः। इत्थं कृष्णपारम्यवादेषु क्रमशः राधाप्राबल्यं जातम्। तस्य परिणतिः राधापारम्यवादे राधावल्लभमतसंस्थापकाचार्यहितहरिवंशमहाभागेन कृता। स्यादेतत्-यथा वैष्णवाः प्राधान्येन कृष्णतत्त्वपारम्यवादं पुरस्कुर्वन्ति तथैव अद्वैतवेदान्ताचार्यमधुसूदनसरस्वती अपि भणति-

**वंशीविभूषितकरान्नवनीरदाभात्**
**पीताम्बरादरुणबिम्बफलाधरोष्ठात्।**
**पूर्णेन्दुसुन्दरमुखादरविन्दनेत्रात्**
**कृष्णात्परं किमपि तत्त्वमहं न जाने, इति।**

कृष्णभक्तिमार्गेण भागवतपुराणं वेदान्तग्रन्थेषु सम्यक् प्रतिष्ठापितम्। ततः परं वेदान्तः पौराणिकदर्शनरूपेण स्थापितः। विष्णुपुराणभागवतपुराणादयो ग्रन्थाः ब्रह्मसूत्रादपि अधिकं महत्त्वं प्राप्तवन्तः सर्वसंशयनिवारकत्वात्। अतः परं च भगवद्गीता साक्षाद्भगवद्वचनत्वेन सर्वैः वेदान्तिभिः व्याख्यायते।

## ७. अथ भगवद्गीतायोगवासिष्ठवेदान्तः

भगवद्गीता सर्ववेदान्तिस्वीकृतग्रन्थोऽस्ति। योगवासिष्ठं च पुरा शांकरवेदान्ताद्भिन्नो ग्रन्थ आसीत्। किन्तु आविद्यारण्यात् तस्य अन्तर्भावः शांकरवेदान्ते जातः। तस्य नाम योगवासिष्ठरामायणमस्ति। रामायण-महाभारतादयः स्मृतिग्रन्थाः। अतएव अत्र योगवासिष्ठवेदान्तनिरूपणं भगवद्गीतावेदान्तेन सह क्रियते।

यथाकालं वेदान्तदर्शनम् औपनिषदं दर्शनं, ब्रह्मसूत्रदर्शनम्, भागवतदर्शनं भगवद्गीतादर्शनमिति चतुर्विधरूपमलभत्। अधुना शताधिकवर्षदारभ्य तस्य विवेचनं प्रायेण भगवद्गीताव्याख्यानेन संपाद्यते। ततः पूर्वं मध्ययुगे भागवतपुराणमाश्रित्य तस्य विवेचनं

वल्लभाचार्यजीवगोस्वामिप्रभृतिभिर्वेदान्तिभिः कृतम्। किन्तु शारीरकमीमांसासूत्रदर्शनमेव मुख्यो वेदान्त इति मतं नालोचनार्हम्, अन्यप्रस्थानग्रन्थानां तस्यैव उपजीव्यत्वात्। यद्यपि वेदान्तसारकृता सदानन्दयतिना वेदान्तो नाम उपनिषत्प्रमाणं तदुपकारीणि शारीरकसूत्रादीनि चेति लिखितं शारीरकदर्शनं च उपचरितार्थे वेदान्त इति मतम्, तथापि शारीरकमीमांसा-सूत्राणां वेदान्तार्थ-विचारानुकूलत्वात् वेदान्तार्थ-सर्वसंग्राहकत्वात् वेदान्तवाक्यप्रमेयासम्भावनाविपरीताभावनापोहत्वाच्च शारीरकमीमांसासूत्रमेव मुख्यो वेदान्तग्रन्थो जातः। यथा सर्वैः वेदान्तसम्प्रदायप्रवर्तकैः ब्रह्मसूत्रभाष्यं प्रणीतं न च तथा तैः उपनिषद्भाष्यं रचितम्। अतः आशंकरात् विद्याभूषणपर्यन्तम् ब्रह्मसूत्रमेव वेदान्तशास्त्रनियामकमस्ति। तदेव वेदान्तजनकं वेदान्तप्रमापकं चेति समस्तवेदान्तपरम्परयैव स्थापितम्।

## ८. अद्वैतवेदान्तस्य अन्यवेदान्तैः सह सम्बन्धः

अस्मिन् ग्रन्थे शांकरवेदान्त-रामानुजवेदान्त-मध्ववेदान्तादिदर्शनानां परस्परनैरपेक्ष्यं स्वातन्त्र्यं स्वतःपूर्णत्वं च प्रतिपादितानि। किन्तु वेदमूलकत्वेन वेदान्तत्वेन च तेषामभेदोऽपि दरीदृश्यते, अतस्तद्वर्णनमिह क्रियते।

रामानुजमध्वप्रभृत्याचार्यैः शांकरवेदान्तनिराकरणाय बहुप्रयासः कृतः। शांकरवेदान्तानुयायिभिरपि तेषां निराकरणं निरस्तं तेषां च मतानि दूषितानि। एवं वेदान्तेतरैः सह अद्वैत-वेदान्तसम्बन्धः प्रायेण खण्डनपरक एव आपाततो दृश्यते। किन्तु सर्वे वेदान्तिनो वैदिका ब्रह्मवादिनश्च भवन्ति, श्रुतिस्मृतिपुराणेतिहासानुकूलसदाचारं चानुसरन्ति। अतस्तेषां मतेषु सामान्यसिद्धान्ता अपि बहुविधा वर्तन्ते। वेदस्य अपौरुषेयत्वं प्रामाण्यस्य स्वतस्त्वं, धर्मस्य प्रथमपुरुषार्थत्वं, मोक्षस्य चरमपुरुषार्थत्वं, वर्णाश्रमधर्मस्य कर्तव्यतयानुपालनीयत्वं गायत्र्यादिमन्त्राणां स्वीकार्यत्वं, ब्रह्मणः सच्चिदानन्दरूपत्वांगीकार्यत्वं, कर्मभक्तिज्ञानमार्गाणां किमपि समन्वयत्वं, योगमार्गस्य उपयोगित्वं, सदाचारस्य धर्मप्रमाणत्वं, कर्मवाद-पुनर्जन्मवादावतारवादप्रभृतिसिद्धान्त-स्वीकार्यत्वं च सर्ववेदान्तसिद्धान्ताः। ततश्च तेषां परस्परं खण्डनव्यापारो गौणः, सामान्यसिद्धान्तवेदमतमण्डनव्यापारश्च प्रधान इति वेदान्तवैविध्येऽन्तर्वहन्तीं सरस्वतीं को न पश्यति? अपरं च काणादं पाणिनीयं च सर्वशास्त्रोपकारकमिति न्यायमंगीकृत्य को वेदान्ती संस्कृतं तर्कशास्त्रं च न व्यवहरति? राष्ट्रभक्तिं, स्वराज्यप्रेम, तीर्थगमनं गुरुभक्तिं लोकसंग्रहरूपसमाजसेवां च को न उपदिशति? तस्मात् समेषां वेदान्तानामैक्यं वरीवर्तत इति निश्चितम्। नहि निन्दान्यायेन तेषां निन्दापरकं कथनमपि स्वमतस्तुत्यर्थं परमतविज्ञापनार्थं च भवतीति सुधीजननिश्चयः। अतश्चोक्तम् माध्ववेदान्तिना वादिराजेन युक्तिमल्लिकायाम् -

"वैदिकानां तु कलहो वेदार्थास्फूर्तितः परम्।
सुरासुराः सुधार्थे प्राक् नैकीभूताः किमम्बुधौ।।
श्रुत्याख्या राजकन्या यत्सर्वा स्मृतिसखीवशा।
अतो अनुकूलतर्काख्यमन्त्रिणा सर्वतो मुखं पालिता।।

स हि श्रुतिसतीकण्ठ सूत्रसूत्रकृदीश्वरः।
जीवस्याच्छादिका त्वेका परस्याच्छादिका परा।।
द्वयं जीवगतं नित्यं हरिस्तूभयमोचकः।
हरेरिच्छापि मायाख्या मायाख्या प्रकृतिर्जडा।।" इति

तच्च सर्वमद्वैतवादिभिरपि तथैव परामृश्यते यथा द्वैतवादिभिः। एवमेव डी.टी. ताताचारीमहाभागो वदति विशिष्टाद्वैतसिद्धौ। यथा अनन्तकृष्णशास्त्रिणा विंशशत्याम् अद्वैतवेदान्त-विशिष्टाद्वैतवेदान्तकलहो वर्धितस्तथा स बहुभ्यो न रोचते। तयोः साम्यात् वेदवादो ब्रह्मवादो वा सनातनधर्मो वा सर्वैः वेदान्तिभिः प्रतिपाद्य इति अर्वाचीनविदुषां मतम्। करपात्रीति नाम्ना प्रसिद्धः हरिहरानन्दसरस्वतीमहाभागोऽपि विंशशत्यां द्वैतवाद-विशिष्टाद्वैतप्रभृतिवादैः सह अद्वैतवादस्य सामञ्जस्यं स्थापयतीति अलं विस्तरेण। ब्रह्मविद्या गरीयसी न तु कश्चिद् वादो वरीयान् इति विज्ञेयं जिज्ञासुभिः।

अपि च अर्थपंचकवादः सर्वैर्वेदान्तिभिः स्वीक्रियते। प्राप्यप्रापकफलोपायतद्विरोधित्वानीति अर्थपंचकम्। प्राप्यं ब्रह्म। तच्च शास्त्रैकगम्यं, वेदैकप्रमाणगम्यं वा। प्रापकश्च जीवः। स च मुमुक्षुः। फलं च मोक्षः परमपुरुषार्थः। उपायश्च मोक्षमार्गः श्रवणमनननिदिध्यासनरूपः। तद्विरोधित्वं च अज्ञानं क्रोधलोभमोहादिकसन्तानरूपमिति अर्थपंचकवादः सर्वेषां वेदान्तिनामैक्यसूत्रम्।

## ६. तत्त्वमसीति व्याख्यानम्

तत्त्वमसीति वाक्यं जीवब्रह्मसम्बन्धं निरूपयति। तत्र तस्य त्वम् असीति मध्ववेदान्तिनः। एतेन जीवब्रह्मणोर्भेदो जीवश्च ब्रह्मणोऽस्ति, न तु ब्रह्मेति तेषां निश्चयः। किन्तु जीवचैतन्यं ब्रह्मचैतन्यात् सर्वथा न भिद्यते, संवित्तिस्वरूपप्रकाशत्वादतो द्वैतवेदान्तिनोऽपि एतावता अभेदं प्रतिपादयन्ति। भास्करनिम्बार्क-विज्ञानभिक्षु बलदेवविद्याभूषणादिद्वैताद्वैतवादिनश्च जीवब्रह्मणो-र्भेदाभेदसम्बन्धं स्वीकुर्वन्ति। तत्पदार्थ त्वं पदार्थयोश्चैतन्यमभिन्नम्, तयोश्च गुणशक्तिकर्मदेहादयो भिन्नाः। अतएव यादृशौ भेदाभेदौ 'असीति' पदेन लक्ष्यते। भेदांशज्ञाने जहल्लक्षणा अभेदांशज्ञाने चाजहल्लक्षणेति तेषां मतम्। किन्तु कथं भेदः अभेदेन सह संगच्छत इत्यत्र विवाद-विषयः तस्य समाधानं द्वैताद्वैतवेदान्तिभिर्बहुविधं क्रियते। किन्तु तत्र व्याघातो नाम दोषो वरीवर्ति। अतएव तं निराकर्तुं रामानुजादिविशिष्टाद्वैतवादिनो निरूपयन्ति यत् भेदः अभेदस्य गुणः विशेषणं वा। इत्थं जीवः त्वंपदार्थो वा ब्रह्मणः तत्पदार्थस्य वा विशेषणमस्ति। किंवा जीवः चिदचिद्विशिष्टः। ब्रह्मापि चिदचिद्विशिष्टम्। अतएव जीवब्रह्मणोरैक्यं विशिष्टत्वमूलकमस्ति। द्रव्यत्वेन भिन्नौ गुणत्वेन च अभिन्नाविति त्वंपदार्थतत्पदार्थौ, तौ च अपृथक्सिद्धाविति विशिष्टाद्वैतवादिनः। किन्तु अपृथक्सिद्धिः कथमनन्यत्वाद् भिद्यत इति अद्वैतवेदान्तिनां प्रश्नः कथमपि भिद्यते इति विशिष्टाद्वैतिनः। न भिद्यते इति अद्वैतिनः। अभेदः भेदनिर्वाहक इति विशिष्टाद्वैतवादिनः। अभेदः शुद्धः भेदस्तु औपाधिक इति अद्वैतवादिनः। अस्मिन् विवादे

अभेदस्यैव मुख्यार्थत्वमिति तेषां सामान्यसिद्धान्तः। अतः अद्वैतवेदान्त एव सर्ववेदान्तसंजीवनमिति निष्कर्षः। अद्वैतवादं विना तत्त्वमसीतिवाक्यस्य शब्दार्थयोजना पदार्थयोजना वा न न्यायसंगता भवतीति अस्मादृशानां मतम्। अतः तत्पदार्थस्य त्वंपदार्थस्य च जहदजहल्लक्षणया ब्रह्मात्मैक्यरूपोऽर्थो निश्चितः। तत्पदार्थस्य वाच्यार्थः ईश्वरः। त्वंपदार्थस्य वाच्यार्थश्च जीवः। किन्तु जीवः ईश्वराद् भिद्यते। अतएव तयोरैक्ये विरोधः। स च लक्षणाबीजम्। जहदजहल्लक्षणया त्वंपदार्थस्य लक्ष्यार्थः आत्मा तत्पदार्थस्य लक्ष्यार्थः ब्रह्म। 'अयमात्मा ब्रह्म' इति श्रुतेः तयोरैक्यं प्रतिपादितम्। अतएव तत्त्वमसि, त्वं ब्रह्म असि वेति आदेशः। सोऽहं ब्रह्मेति अनुभवश्च तत् त्वमसीति आदेशात् भवतीति सर्ववेदान्तसिद्धान्तः। ब्रह्मैव परमार्थः। ब्रह्मसाक्षात्कारश्च सत्यसिद्धिरिति सर्ववेदान्तमतनिष्कर्षः।

## १०. कार्यकारणवादः

कार्यकारणवादस्तत्त्वदर्शनस्य नियामकः। किं कारणं किं कार्यं कश्च तयोः संबंध इत्यत्र प्रश्नाः। प्रश्नत्रयेऽपि मुख्यः प्रश्नोऽन्तिमः। कार्यकारणसम्बन्धस्य अन्तर्भावः समवाये वैशेषिकैः क्रियते। किन्तु वेदान्तिनस्तन्न सहन्ते। समवायाभ्युपगमाच्च साम्यादनवस्थितेरिति सूत्रेण बादरायणाचार्येणैव समवायवादो निराकृतः। तत्र कारणे कार्योत्पादनशक्तिरस्तीति मध्ववेदान्तिभिः शक्तिर्नाम पदार्थोऽभिमतः। इयं शक्तिः सहजशक्तिरभिधीयते। सा तु परमात्मशक्तेर्भिन्नेति माध्वमतम्। न सा परमात्मशक्तेर्भिन्नेति निम्बार्कवल्लभबलदेवविद्याभूषणाः। तस्या अन्तर्भावोऽचिन्त्यशक्ताविति तेषां मतम्। सा शक्तिः वास्तविकी औपाधिकी वेति विवादविषयः। वास्तविकीति वैष्णववेदान्तिनः। औपाधिकीति शांकरवेदान्तिनः। तत्र कल्पनालाघवात् शांकरमतमेव न्यायसम्मतम् प्रतिभाति।

अपरं च कार्यकारणयोः संबन्धः भेदाभेदसम्बन्ध इति मध्वनिम्बार्कबलदेवविद्याभूषणाः। स तु अभेद एवेति वल्लभाचार्यः। अपृथक्सिद्धिरिति रामानुजाः। अनन्यत्वमिति शांकराः।

अपि च कथं भेदाभेदसंबन्धः? स प्रधानसम्वन्धः भेदाभेदसमरूप इति निम्बार्कबलदेव-विद्याभूषणाः। भेदश्च अभेदविशिष्टता विशिष्टता च स्वतंत्रपदार्थ इति माध्वाः। यद्यपि भेदः अभेदविशेषणमस्ति तथापि विशिष्टता न स्वतन्त्रपदार्थ इति रामानुजीयाः। वैशिष्ट्यं सविशेषत्वं वा पदार्थस्वरूपमेव ते ख्यापयन्ति। न तद् पदार्थस्य रूपमिति शांकराः, औपाधिकत्वेन तद्व्याख्यानसंभवात्। इत्थं भेदो नाम विवर्त इति सिद्धम्। पुनश्च कार्यं कारणे सद् असद्वेति प्रश्नः। तत्र सदसद्वाद इति मध्वाचार्यः। शक्तिपरिणामरूप सत्कार्यवाद इति निम्बार्काचार्यः। अयं परिणामश्च शक्तिविक्षेपात्मकपरिणाम इत्युच्यते। स च सांख्यस्य प्रकृतिपरिणामवादाद् भिद्यते। यतो हि सांख्ये प्रकृतिः स्वतन्त्रा जडा च। किन्तु निम्बार्कमते प्रकृतिरीश्वरशक्तिः चेतना परतन्त्रा च। एतादृशी प्रकृतिः ईश्वराद् भिन्नापि सती तदभिन्नास्तीति वास्तविक-भेदाभेदवादः निम्बार्काचार्यस्य। स भेदाभेदवादः औपाधिक इति भास्कराचार्यः। स तु अचिन्त्य इति बलदेवविद्याभूषणः।

